(प्रसाराकुञ्चनोत्क्षेपा गत्यवक्षेपणे इति ।
परश्चापरमित्यत्र सामान्य द्विविध मतम् ॥ २७ ॥
पर सत्तादि सामान्य द्रव्यत्वाद्यपर मतम् ।
परस्परविवेकोऽत्र द्रव्याणा यैस्तु गम्यते' ॥ २८ ॥
विशेषा इति ते ज्ञेया द्रव्यमेव समाश्रिता ।
सम्बन्धस्समवायस्स्यात् द्रव्याणान्तु गुणादिभि ॥ २९ ॥
षट् पदार्था इमे ज्ञेयास्तन्मय सकल जगत् ।
तेषा साधर्म्यवैधर्म्यज्ञान मोक्षस्य साधनम् ॥ ३० ॥
द्रव्यान्तर्गत एवात्मा भिन्नो जीवपरत्वत ।
देवा मनुष्यास्तिर्यञ्चो 'जीवास्त्वन्यो महेश्वर ॥ ३१ ॥
तदाज्ञप्तक्रिया' कुर्वन् मुच्यतेऽन्यस्तु बध्यते ।
श्रुतिस्मृतीतिहासाद्य पुराण भारतादिकम् ॥ ३२ ॥
ईश्वराज्ञेति विज्ञेया न लङ्घ्या वैदिकै क्वचित् ।
त्रिधा प्रमाण प्रत्यक्षमनुमानागमावितिं ॥ ३३ ॥
त्रिभिरेतै ' प्रमाणैस्तु जगत्कर्तावगम्यते ।
तस्मात्तदुक्तकर्माणि कुर्यात्तस्यैव तृप्तये ॥ ३४ ॥
भक्त्यैवावर्जनीयोऽसौ भगवान्परमेश्वर ।
तत्प्रसादेन मोक्ष स्यात् करणोपरमात्मक ॥ ३५ ॥

---

[1] V क्षपग° for क्षेपा ग° and क्षेपणामकम् for क्षेपणे इति
P and M आपि for इति
P M विशेष for विवेक
M लभ्यते T लभ्यते for गम्यते
I जीन for जीवा
T क्रिया for क्रियाम्
P हासाद्य for हासाद्यम्
T ईश्वरादेव for ईश्वराज्ञेति
T °गमावपि for °गमाविति
M त्रिभिरेव for त्रिभिरेतै
P भक्त्यैव चार्चनीया° for भक्त्यै-वावर्जनीयो°

करणोपरमे त्वात्मा पाषाणवदवस्थितः।
दुःखसाध्यः सुखोच्छेदो दुःखोच्छेदवदेव नः ॥ ३६ ॥
अतस्संसारनिर्विण्णो मुमुक्षुर्मुच्यते जनः ।
पश्चान्नैयायिकस्तर्कैः साधयिष्याति नश्शिवम् ।
[1]नातिभिन्नं मतं यस्मादावयोर्वेदवादिनोः[1] ॥ ३७ ½ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे वैशेषिकपक्षो नाम पञ्चमं प्रकरणम्.

---

[1] P तथातिभिन्नं सिद्धान्तम् for नाति . स्मात्.

## अथ नैयायिकपक्षः

नैयायिकस्य पक्षोऽथ[1] संक्षेपात्प्रतिपाद्यते ।
यस्तर्करक्षितो वेदो ग्रस्तः पाषण्डदुर्जनैः ॥ १ ॥
अक्षपादः प्रमाणादिषोडशार्थप्रबोधनात् ।
जीवानां मुक्तिमाचष्टे प्रमाणञ्च प्रमेयता ॥ २ ॥
निर्णयस्संशयोऽन्यश्च प्रयोजननिदर्शने ।
सिद्धान्तावयवौ तर्को वादो जल्पो वितण्डता ॥ ३ ॥
हेत्वाभासश्छलं जातिर्निग्रहस्थानमित्यपि ।
प्रत्यक्षमनुमानाख्यमुपमानागमाविति[2] ॥ ४ ॥
चत्वार्यत्र प्रमाणानि नोपमानन्तु कस्य चित् ।
प्रत्यक्षमस्मदादीनामस्त्यन्ययोगिनामपि ॥ ५ ॥
पश्यन्ति योगिनस्तं धर्ममीश्वरस्य प्रसादतः[3] ।
स्वभावेनेश्वरस्सर्वं पश्यति ज्ञानचक्षुषा ॥ ६ ॥
यत्नेनापि न जानन्ति[4] सर्वेशं मांसचक्षुषः ।
ईश्वरं साधयत्येतदनुमानमिति[5] स्फुटम् ॥ ७ ॥
भूर्भूधरादिकं सर्वं सर्वविद्धेतुकं मतम्[6] ।
कार्यत्वाद्घटवच्चेति जगत्कर्तानुमीयते ॥ ८ ॥
कार्यत्वमप्यसिद्धं चेत्क्ष्मादेस्सावयवत्वतः[7] ।

1 P पक्षोऽयम for पक्षोऽथ
P दुर्मनात् for दुर्जनैः
2 P 'मान स्यादुप for मानाख्यमुप'
3 P 'स्तत्त्वम् for स्तंधर्मम्
4 P युक्तिमार्गेण पश्यन्ति for यत्नेनापि जानन्ति
5 P 'मपि for 'मिति
6 P सर्वविन्कर्तृपूर्वकम् for सर्वविद्धेतुकं मतम्.
7 P क्ष्मादेरवयवित्वात् for क्ष्मादेस्सावयवत्वतः

घटकुड्यादिवच्चेति कार्यत्वमपि साध्यते ॥ ९ ॥
दृष्टान्तासिद्धदेहादेर्धर्माधर्मप्रसङ्गत ।
न विशेषविरोधोऽत्र वाच्यो भट्टादिभि कचित् ॥ १० ॥
उत्कर्षसमजातित्वात्सम्यग्दोषो न तादृश ।
कार्यत्वमात्रात्कर्तृत्वमात्रमेवानुमीयते ॥ ११ ॥
दृष्टान्तस्थविशेषैस्त्व विरोध यदि भाषसे ।
धूमेनाग्न्यनुमानस्याप्यभावोऽपि प्रसज्यते ॥ १२ ॥
अशरीरोऽपि कुरुते शिव कार्यमिहेच्छया ।
देहानपेक्षो देह स्व यथा चेष्टयते जन ॥ १३ ॥
इच्छाज्ञानप्रयत्नाख्या महेश्वरगुणास्त्रय ।
शरीररहितेऽपि स्यु परमाणुस्वरूपवत् ॥ १४ ॥
कार्यं क्रिया विना नात्र सा क्रिया यत्नपूर्विका ।
क्रियात्वात् साध्यतेऽस्माभिरस्मदादिक्रिया यथा ॥ १५ ॥
सर्वज्ञीयक्रियोद्भूतक्ष्मादिकार्योपपत्तिभि ।
ईश्वराप्तत्वमुक्त यन्निरस्त पारिशेष्यत ॥ १६ ॥
यथा वैशेषिकेणेश पारिशेष्येण साधित ।
तत्तर्कोऽत्रानुसन्धेय समान शास्त्रमावयो ॥ १७ ॥
कालकर्मप्रधानादेरचैतन्याच्छिवोऽपर ।
अल्पज्ञत्वात्तु जीवाना ग्राह्यस्सर्वज्ञ एव स ॥ १८ ॥
सर्वज्ञेशप्रणीतत्वाद्वेदप्रामाण्यमिष्यते ।

---

P M धर्मत्रत्वप्रसङ्गत for धर्माधर्मप्रसङ्गत

[2] M विशेषैस्तु for विशेषैस्त्वम्

[3] P मानस्य ह्यभाव for मानस्याप्यभाव

[4] \ reads after th s line the following अशरीरस्तथापीशो यतते कार्यसिद्धये

[5] P क्रिया त्रिगीतात्र कस्याचिद्यत्नपूर्विका for क्रिया विना पूर्विका

[6] Y परिशेषत for पारिशेष्यत

[7] Y तम् for शास्त्रम

स्मृत्यादीनां प्रमाणत्वं तन्मूलत्वेन सिध्यति ॥ १९ ॥
श्रौतं स्मार्तं च यत्कर्म[1] यथावदिह कुर्वताम् ।
स्वर्गापवर्गौ स्यातां हि नैव पाषण्डिनां क्वचित् ॥ २० ॥
त्रियम्बकादिभिर्मन्त्रैरपि देवो महेश्वरः ।
अनुष्ठानोपयुक्तार्थस्मारके प्रतिपाद्यते ॥ २१ ॥
कारीरीष्टयर्थवृष्ट्यादि[2] दृष्ट्वा स्वर्गापवर्गयोः ।
विश्वासोऽदृष्टयोः कार्यं कारणाद्यैः[3] प्रमाणितैः ॥ २२ ॥
अप्रमाणमशेषं च[4] शास्त्रं बुद्धादिकल्पितम् ।
स्यादनाप्तप्रणीतत्वादुन्मत्तानां यथा वचः ॥ २३ ॥
बीजप्ररोहरक्षार्थे वृतिं[5] कण्टकिनीं यथा ।
वेदार्थतत्त्वरक्षार्थं तथा[6] तर्कमयीं वृतिः ॥ २४ ॥
प्रमानुग्राहकस्तर्कः[7] स कथात्रयसंश्रितः ।
वादो जल्पो वितण्डेति तिस्र एव कथा मताः ॥ २५ ॥
आचार्येण तु शिष्यस्य वादस्तत्त्वबुभुत्सया ।
जयः पराजयो नात्र तौ तु जल्पवितण्डयोः ॥ २६ ॥
वादी च प्रतिवादी च प्राश्निकश्च सभापतिः ।
चत्वार्यङ्गानि जल्पस्य वितण्डायास्तथैव च ॥ २७ ॥
सदुत्तरापरिज्ञानात् पराजयभये सति ।
जयेच्छलेन जात्या वा प्रतिवादी तु वादिनम् ॥ २८ ॥
छलं जातिं ब्रुवाणस्य निग्रहस्थानमीरयेत्[9] ।

---

[1] P स्मार्तं यदुक्तं च for स्मार्तं च यत्कर्म
[2] M कारीरीष्ट्युक्तवृ° for कारीरीष्टयर्थवृ°
[3] V तत्कारणादि for कारणाद्यैः
[4] M °शेषं तु for °शेषं च
[5] V यथा कण्टकिनीं वृतिं for वृतिं ... यथा
[6] P M कृता for तथा
[7] V मानानु° for प्रमानु°
[8] P M स्मृतः for सम्मृतः
[9] V स्थानमाचरेत् for स्थानमीरयेत्

निग्रहस्थानमित्युक्त कथाविच्छेदकारकम्[1] ॥ २९ ॥
तत्रोपचारसामान्यवाक्पूर्वं त्रिविध छलम् ।
चतुर्वेदविदित्युक्ते कस्मिंश्चिद्वादिना द्विजे ॥ ३० ॥
किमत्र चित्र ब्राह्मण्ये चतुर्वेदज्ञतोचिता ।
एव सामान्यदृष्टचा तु दूषिते प्रतिवादिना ॥ ३१ ॥
वदेद्वाक्यैरनेकान्त निग्रहस्थानमप्यथ ।
नववस्त्रो षटुश्चेति वाद्युक्ते तत्र वाक्छलम् ॥ ३२ ॥
कुतोऽस्य नव वासासीत्याचक्षाणस्य निग्रह ।
तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् ॥ ३३ ॥
स्वस्य व्याघातक वाक्य दूषणक्षममेव वा ।
उत्तर जातिरित्याहु चतुर्विंशतिभेदभाक् ॥ ३४ ॥
चतुर्विंशतिजातीना प्रयोक्तु प्रतिवादिनः ।
वक्तव्य निग्रहस्थानमसदुत्तरवादिन ॥ ३५ ॥
यथा साधर्म्यवैधर्म्यात्समोत्कर्षापकर्षत ।
वर्ण्यावर्ण्यविकल्पाश्च [3]प्राप्त्यप्राप्तीतिसाध्यता ॥ ३६ ॥
प्रसङ्गप्रतिदृष्टान्तावनुत्पत्तिश्च[4] सशय ।
अर्थापत्त्यविशेषौ च हेतुप्रकरणाह्वयौ ॥ ३७ ॥
कार्योपलब्ध्यनुपलब्धिनित्यानित्याश्च जातय ।
साम्यापादक[5]हेतुत्वात् समनाजानयो मता ॥ ३८ ॥
सदुत्तरापरिज्ञाने स्यादेकान्तपराजय ।

[1] P कारकम् for कारणम्
[2] V alone reads this and the next two lines
[3] १ प्राप्तयप्राप्तिसमा तथा for प्राप्त्यप्राप्तीतिसाध्यता:
[4] १ दृष्टान्तानुपपत्तिश्च for दृष्टान्तावनुत्पत्तिश्च
[5] M साम्यापादन for साम्यापादक

एवं जल्पवितण्डाभ्यां वेदबाह्यान्निरस्य तु ॥ ३९ ॥

वेदैकविहितं कर्म कुर्यादीश्वरतृप्तये ।
तत्प्रसादाप्तयोगेन मुमुक्षुर्मोक्षमाप्नुयात् ॥ ४० ॥

नित्यानन्दानुभूतिः स्यान्मोक्षे तु विषयादृते ।
वरं वृन्दावने रम्ये शृगालत्वं वृणोम्यहम् ॥ ४१ ॥

वैशेषिकोक्तमोक्षात्तु सुखलेशविवर्जितात् ।
यो वेदविहितैर्यज्ञैरीश्वरस्य प्रसादतः ॥ ४२ ॥

मूर्छामिच्छति यत्नेन पाषाणवदवस्थितिम्[1] ।
मोक्षो हि हरि[2]भक्त्याप्तयोगेनेति पुरोदितः[3] ॥ ४३ ॥

अष्टावङ्गानि योगस्य यमोऽथ[4] नियमस्तथा ।
आसनं पवनायामः प्रत्याहारोऽथ धारणम् ॥ ४४ ॥

ध्यानं समाधिरित्येवं[5] तत्साङ्ख्यो विस्तरिष्यति ॥ ४५ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे नैयायिकपक्षो नाम पञ्चमप्रकरणम्

---

1 T स्थितम् for स्थितिम्
2 M शिव for हरि
3 M परोदितम् for पुरोदितः
4 S यमो हि for यमोऽथ
5 T °माधिरेवैतत् for समाधिरित्येवम्

## अथ प्रभाकरपक्ष .

---

प्रभाकरगुरो[1]पक्ष संक्षेपादथ कथ्यते ।
तुष्टाव पूर्वमीमांसामाचार्यैस्पर्यैयापि[2] य ॥ १ ॥

द्रव्य गुणास्तथा कर्म सामान्य परतन्त्रता * ।
पदार्थाश्शक्तिसादृश्यसङ्ख्याभिस्त्वष्टधा स्मृता ॥ २ ॥

न विशेषो न चाभावो भूतलाद्यतिरेकत ।
वेदैकविहित कर्म मोक्षद नापर गुरो[3] ॥ ३ ॥

बध्यते स हि लोकस्तु य काम्यप्रतिषिद्धकृत् ।
विध्यर्थवाद[4]मन्त्रैश्च नामधेयैश्चतुर्विध ॥ ४ ॥

वेदा विधिप्रधानोऽय धर्माधर्मावबोधक ।
आत्मा ज्ञातव्य इत्यादिविधयस्त्वारुणे स्थिता ॥ ५ ॥

यथावदात्मना तत्र बोध विदधते स्फुटम् ।
बुद्धी[5]न्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुव ॥ ६ ॥

नानारूप प्रतिक्षत्रमर्थज्ञानेषु भासते ।
घट जानाम्यह स्पष्टमित्यत्र युगपत्त्रयम् ॥ ७ ॥

घटो विषयरूपेण कर्ताहमत्ययागत ।
स्वयप्रकाशरूपेण ज्ञान भाति जनस्य हि[8] ॥ ८ ॥

---

1 P गुरोरुक्ति for गुरो पक्ष
2 °मान्नारा प्राहयच्च for °मा चार्यैस्पर्यैयापि
3 P मतम for गुरो
4 T वीद for वाद
5 I देह° for बुद्धी°
6 T प्रत्ययाह्वत for प्रत्ययागत
7 P भूतम् for भाति
8 M तु for हि

* This and the following two lines are to be found in V alone

करणोपरमान्मुक्तिमाह वैशेषिको यथा ।
दुरसहापार[1]संसारसागरोत्त[2]रणोत्सुकः ॥ ९ ॥

प्रयत्नसुखदुःखेच्छाधर्माधर्मादिनाशनः[3] ।
पाषाणवदवस्थानमात्मनो मुक्तिमिच्छति ॥ १० ॥

दुःखसाध्यसुखोच्छेदो दुःखोच्छेदवदिष्यते ।
नित्यानन्दानुभूतिश्च[4] निर्गुणस्य न चेष्यते ॥ ११ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
अन्यस्तन्न्यासिनां मार्गो जायतीति न कर्मिणाम् ॥ १२ ॥

तस्माद्यागादयो धर्माः कर्तव्या विहिता यतः ।
अन्यथा प्रत्यवायस्स्यात्कर्मण्येवाधिकारिणाम् ॥ १३ ॥

कर्ममात्रैकशरणाः श्रेयः प्राप्स्यन्त्यनुत्तमम् ।
न देवता चतुर्थ्यन्तविनियोगादृते परा ॥ १४ ॥

वेदबाह्यान्निराकृत्य भट्टाचार्यैर्गते पथि ।
चक्रे प्रभाकरश्शास्त्रं गुरुः कर्माधिकारिणाम् ॥ १५ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे प्रभाकरपक्षो नाम सप्तमप्रकरणम्.

---

[1] M °हासार for °हापार.
[2] M °तारण for °त्तरण.
[3] P नाशनम् for नाशनः.
[4] M भूतिस्तु for भूतिश्च.

स यद्यागमकल्पस्स्यान्नित्योऽनित्य किमागम ।
नित्यश्चेत्त प्रतीशस्य केय कर्तृत्वकल्पना ॥ २१ ॥

अनित्यागमपक्षे स्यादन्योऽन्याश्रयदूषणम्[1] ।
आगमस्य प्रमाणत्वमीश्वरोक्तत्वेश्वरस्तत ॥ २२ ॥

आगमात्सिध्यतीत्येवमन्योऽन्याश्रयदूषणम् ।
स्वत एव प्रमाणत्वमतो वेदस्य सुस्थितम् ॥ २३ ॥

धर्माधर्मौ च वेदैकगोचरावित्यपि स्थितम ।
ननु वेद विना साक्षात्करामलकवत्स्फुटम् ॥ २४ ॥

पश्यन्ति योगिनो धर्मं कथ वेदैकमानता ।
तदयुक्त न योगी स्यादस्मदादिविलक्षण ॥ २५ ॥

सोऽपि पञ्चेन्द्रियै पश्यन् विषय नातिरिच्यते ।
प्रत्यक्षमनुमानाख्यमुपमानमनन्तरम् ॥ २६ ॥

अर्थापत्तिरभावश्च न धर्मं बोधयन्ति वै ।[2]
तत्तदिन्द्रिययोगेन वर्तमानार्थबोधकम ॥ २७ ॥

प्रत्यक्ष न हि गृह्णाति सोऽप्यतीतमनागतम् ।
धर्मेण नित्यतन्त्राद्धिरूपस्याभावन क्वचित् ॥ २८ ॥

नानुमानमपि व्यक्त धर्माधर्मावबोधकम् ।
धर्मादिसदृशाभावादुपमानमपि क्वचित् ॥ २९ ॥

सादृश्यग्राहक नैव धर्माधर्मावबोधकम् ।
सुखस्य कारण धर्मो दु खस्याधर्म इत्यपि ॥ ३० ॥

---

1 दन्योऽन्यश्चापि ६ c दन्योऽन्याश्रयदूषणम

2 P M च for वै

बोधं विदधते ब्रह्मण्यात्मनां परमात्मनि ॥ १० ॥
दूषयन्त्यनुमानाभ्यां बौद्धा वेदमपि स्फुटम् ।
तन्मूलत्वाद्धर्मादेरपलापस्तु[1] सिध्यति ॥ ११ ॥
वेदोऽप्रमाणं वाक्यत्वाद्रथ्यापुरुषवाक्यवत् ।
अथवानाप्त[2]प्रणीतत्वादुन्मत्तानां यथा वचः ॥ १२ ॥
तदयुक्तमिमौ हेतू भवेतामप्रयोजकौ ।
वाक्यत्वमात्राद्वेदस्य न भवत्यप्रमाणता ॥ १३ ॥
अनाप्तपुरुषोक्तत्वं हेतुस्ते न प्रयोजकः ।
स्यादनाप्तोक्ततामात्रादप्रामाण्यं न च श्रुते ॥ १४ ॥
नित्यवेदस्य चानाप्तप्रणीतत्वं न दुष्यति ।
विप्रलम्भादयो दोषा विद्यन्ते पुंगिरां सदा ॥ १५ ॥
वेदस्यापौरुषेयत्वाद्दोषाशङ्कैव नास्ति नः ।
वेदस्यापौरुषेयत्वं केचिन्नैयायिकादयः ॥ १६ ॥
दूषयन्तीश्वरोक्तत्वाभ्युपगमाना प्रमाणताम् ।
पौरुषेयो भवेद्वेदो वाक्यत्वाद्भारतादिवत् ॥ १७ ॥
सर्वेश्वरप्रणीतत्वं प्रामाण्यमपि सुस्थितम् ।
प्रामाण्यं विद्यते नेति पौरुषेयेषु युज्यते ॥ १८ ॥
वेदे वक्तुरभावाच्च तद्वार्तापि सुदुर्लभा ।
वेदस्य नित्यता प्रोक्ता [3]प्रामाण्येनोपयुज्यते ॥ १९ ॥
सर्वेश्वरप्रणीतत्वं प्रामाण्यस्यैव कारणम् ।
तदयुक्तं प्रमाणेन केनात्रेश्वरकल्पना ॥ २० ॥

---

[1] C °लापोऽपि for लापस्तु
[2] C अथवाप्ताप्र° for अथानाप्त
[3] C प्रामाण्ये नापि यु° for प्रामाण्येनोपयु°

स यद्यागमकर्तृपरस्यान्नित्योऽनित्यः किमागम ।
नित्यश्चेत्तं प्रतीशस्य केयं कर्तृत्वकल्पना ॥ २१ ॥

अनित्यागमपक्षे स्यादन्योऽन्याश्रयदूषणम्[1] ।
आगमस्य प्रमाणत्वमीश्वरोक्तत्वेश्वरस्तत ॥ २२ ॥

आगमात्सिध्यतीत्येवमन्योऽन्याश्रयदूषणम् ।
स्वत एव प्रमाणत्वमतो वेदस्य सुस्थितम् ॥ २३ ॥

धर्माधर्मौ च वेदैकगोचरावित्यपि स्थितम् ।
ननु वेद विना साक्षात्करामलकवत्स्फुटम् ॥ २४ ॥

पश्यन्ति योगिनो धर्मं कथं वेदैकमानता ।
तदयुक्तं न योगी स्यादस्मदादिविलक्षण. ॥ २५ ॥

सोऽपि पञ्चेन्द्रियै पश्यन् विषय नातिरिच्यते ।
प्रत्यक्षमनुमानाख्यमुपमानमनन्तरम् ॥ २६ ॥

अर्थापत्तिरभावश्च न धर्मं बोधयन्ति वै ।[2]
तत्तदिन्द्रिययोगेन वर्तमानार्थबोधकम् ॥ २७ ॥

प्रत्यक्ष न हि गृह्णाति सोऽप्यतीतमनागतम् ।
धर्मेण नित्यसम्बन्धिरूपस्याभावत· क्वचित् ॥ २८ ॥

नानुमानमपि व्यक्त धर्माधर्मावबोधकम् ।
धर्मादिसदृशाभावादुपमानमपि क्वचित् ॥ २९ ॥

सादृश्यग्राहकं नैव धर्माधर्मावबोधकम् ।
सुखस्य कारणं धर्मो दु खस्याधर्म इत्यपि ॥ ३० ॥

---

[1] P दन्योऽन्यव्यापित् for दन्योऽन्याश्रयदूषण

[2] P M च for वै.

अर्थापत्त्यात्र सामान्यमात्रे [1]ज्ञाते न दुष्यति ।
सामान्यमनुष्ठेयं किंचातीतं तदा भवेत् ॥ ३१ ॥
यागादयो ह्यनुष्ठेया [2]विशेषा विधिचोदिताः ।
अभावाख्यं प्रमाणं न पुण्यापुण्यप्रकाशकम् ॥ ३२ ॥
प्रमाणपञ्चकाभावे तत् सदा वर्तते यतः ।
वेदैकगोचरौ तस्माद्धर्माधर्माविति स्थितम् ॥ ३३ ॥
वेदैकविहितं कर्म मोक्षदं नापरं ततः ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ ३४ ॥
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया[3] ।
आत्मा ज्ञातव्य इत्यादिविधिभिः प्रतिपादिते ॥ ३५ ॥
जीवात्मनां प्रबोधस्तु जायते परमात्मनि ।
प्रत्याहारादिकं योगम[4]भ्यस्यन्विहितक्रियः ॥ ३६ ॥
मनःकरणकेनात्मा प्रत्यक्षेणावसीयते ।
भिन्नाभिन्नात्मकस्त्वात्मा गोवत्सदसदात्मनः ॥ ३७ ॥
जीवरूपेण भिन्नोऽपि त्वभिन्नः पररूपतः ।
असत्त्वाज्जीवरूपेण सद्रूपः पररूपतः[5] ॥ ३८ ॥
शाबलेयादिगोष्वेव यथा गोत्वं प्रतीयते ।
परमात्मा स्वनुस्यूतवृत्तिर्जीवेऽपि बुध्यताम् ॥ ३९ ॥
त्रैयम्बकादिभिर्मन्त्रैः पूज्यो ध्येयो मुमुक्षुभिः ।
ध्यात्वैवारोपिताकारं कैवल्यं सोऽधि[6]गच्छति ॥ ४० ॥

---

1 P ज्ञाने न for ज्ञाते न.
2 P विशेषांविधि for विशेषा विधि
3 P जिघांसया for जिहासया
4 C °मभ्यसन् for °मभ्यस्यन्
5 P रूपक for रूपतः
6 C सोऽपि for सोऽधि°.

परानन्दानुभूतिः स्यान्मोक्षे तु विषयादृते ।
विषयेषु विरक्तास्स्युर्नित्यानन्दानुभूतितः ॥
गच्छन्त्यपुनरावृत्तिं मोक्षमेव मुमुक्षवः ॥ ४१ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे भट्टाचार्यपक्षो नाम अष्टमप्रकरणम्.

---

## अथ साङ्ख्यपक्षः

साङ्ख्यदर्शनसिद्धान्तः संक्षेपादथ कथ्यते ।
साङ्ख्यशास्त्रं द्विधाभूतं सेश्वरञ्च निरीश्वरम् ॥ १ ॥
चक्रे निरीश्वरं साङ्ख्यं कपिलोऽन्यत्पतञ्जलिः ।
कपिलो वासुदेवस्स्यादनन्तस्स्यात्पतञ्जलिः ॥ २ ॥
ज्ञानेन मुक्तिं कपिलो योगेनाह पतञ्जलिः ।
योगी कपिलपक्षोक्ततत्त्वज्ञानमपेक्षते ॥ ३ ॥
श्रुतिस्मृतीतिहासेषु पुराणे भारतादिके ।
साङ्ख्योक्तं दृश्यते स्पष्टं तथा शैवागमादिषु ॥ ४ ॥
व्यक्ताव्यक्तविवेकेन पुरुषस्यैव वेदनात् ।
दुःखत्रयनिवृत्तिः स्यादेकान्तात्यन्ततो नृणाम् ॥ ५ ॥
दुःखमाध्यात्मिकं चाधिभौतिकं चाधिदैविकम् ।
आध्यात्मिकं मनोदुःखं व्याधयः पिटकादयः ॥ ६ ॥
आधिभौतिकदुःखं स्यात् कीटादिप्राणिसम्भवम् ।
वर्षातपादिसम्भूतं दुःखं स्यादाधिदैविकम् ॥ ७ ॥
एकान्तात्यन्ततो दुःखं निवर्तेतात्मवेदनात् ।
उपायान्तरतो मोक्षः क्षयातिशयसंयुतः ॥ ८ ॥
न चौषधैर्न यागाद्यैः स्वर्गादिफलहेतुभिः ।
त्रैगुण्यविपर्ययैर्मोक्षस्तत्त्वज्ञानादृते परैः ॥ ९ ॥
पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तादिकानि च ।
वेत्ति यस्यैव विस्पष्टमात्मज्ञानं भविष्यति ॥ १० ॥
१ पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ ११ ॥ १

---

१० दुर्लभ for दर्शन    १८ सिद्धम् for स्पष्टम्

पञ्चविंशतितत्त्वानि पुरुषः प्रकृतिर्महान् ।
अहङ्कारश्च शब्दश्च स्पर्शरूपरसास्तथा ॥ १२ ॥
गन्धः श्रोत्रं त्वक्च चक्षुर्जिह्वा घ्राणञ्च वागपि ।
पाणिः पादस्तथा पायुरुपस्थश्च मनस्तथा ॥ १३ ॥
पृथिव्यापस्तथा तेजो वायुराकाशमित्यपि ।
सृष्टिप्रकारं वक्ष्यामि तत्त्वात्मकमिदं जगत्[2] ॥ १४ ॥
सर्वं हि प्रकृते. कार्यं नित्यैका प्रकृतिर्जडा ।
प्रकृते[3]स्त्रिगुणावेशादुदासीनोऽपि कर्तृवत ॥ १५ ॥
स चेतनावत्तद्योगात्सर्गः पङ्ग्वन्धयोगवत् ।
प्रकृतिर्गुणसाम्य स्याद्गुणास्सत्त्वं रजस्तमः ॥ १६ ॥
सत्त्वोदये सुखं प्रीति शान्तिर्लज्जाङ्गलाघवम् ।
क्षमा धृतिरकार्पण्यं दमो ज्ञानप्रकाशनम्[4] ॥ १७ ॥
रजोगुणोदये लोभ. सन्तापः कोपविग्रहौ ।
अभिमानो मृषावाद प्रवृत्तिर्दम्भ इत्यपि ॥ १८ ॥
तमोगुणोदये तन्द्री मोहो निद्राङ्गगौरवम् ।
आलस्यमप्रबोधश्च प्रमादश्चैवमादय ॥ १९ ॥
व्यासाभिप्रेतसिद्धान्ते वक्ष्येऽहं भारते स्फुटम् ।
त्रैगुण्यविततिं सम्यग्विस्तरेण यथातथम्[5] ॥ २० ॥
प्रकृतेः स्यान्महांस्तस्मादहङ्कारस्ततोऽप्यभूत् ।
तन्मात्राख्यानि पञ्च स्यु सूक्ष्मभूतानि तानि हि ॥ २१ ॥
वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च ।
शब्दस्स्पर्शस्तथा रूपं रसो गन्ध इतीरिताः ॥ २२ ॥

---

[1] [illegible] त्वचश्चक्षुः for त्वक् च चक्षुः
[2] C alone reads this line
[3] P. M प्रकृतिः for प्रकृतेः.
[4] C प्रकाशकम् for प्रकाशनम्
[5] P M यथा तथा for यथातथम्.

खवाय्वग्न्यम्बुपृथ्व्यस्तु सूक्ष्मा एव न चापरे ।
पटः स्याच्छुक्लतन्तुभ्यः शुक्ल एव यथा तथा ॥ २३ ॥
त्रिगुणानुगुणं तस्मात्तत्त्वसृष्टिरपि त्रिधा[1] ।
सत्त्वात्मकानि सृष्टानि तेभ्यो ज्ञानेन्द्रियाण्यथ ॥ २४ ॥
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमित्यत्र पञ्चकम्[2] ।
तैश्शब्दस्पर्शरूपाणि रसगन्धौ प्रवेत्त्यसौ ॥ २५ ॥
रजोगुणोद्भवानि स्युस्तेभ्यः कर्मेन्द्रियाण्यथ ।
वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च ॥ २६ ॥
वचनादानगमनविसर्गानन्दकर्म च ।
मनोऽन्तःकरणाख्यं स्यात् ज्ञेयमेकादशेन्द्रियम् ॥ २७ ॥
तमोगुणोद्भवान्येभ्यो महाभूतानि जज्ञिरे ।
पृथिव्यापस्तथा तेजो वायुराकाश[3] इत्यपि ॥ २८ ॥
पञ्चविंशतितत्त्वानि प्रोक्तान्येतानि वै मया ।
एतान्येव विशेषेण ज्ञातव्यानि गुरोर्मुखात् ॥ २९ ॥
आत्मानः प्रळये लीना[4] प्रकृतौ सूक्ष्मदेहिनः ।
गुणकर्मवशाद्ब्रह्मस्थावरान्तस्वरूपिणः ॥ ३० ॥
प्रकृतौ सूक्ष्मरूपेण स्थितमेवाखिलं जगत् ।
अभिव्यक्तमेवत्येव नासदुत्पत्तिरिष्यते ॥ ३१ ॥
असदुत्पत्तिपक्षे च शशशृङ्गादि सम्भवेत् ।
असत्तैलं तिलादौ चेत्सिकताभ्योऽपि तद्भवेत् ॥ ३२ ॥

---

[1] C reads करणानुविधायित्वात् कार्यस्य त्रिगुणात्मकम् instead of the line beginning with त्रिगुण.

[2] P M पञ्च वै for पञ्चकम्.

[3] C वायुराकाशमे° for वायुराकाश इ°.

[4] C प्रळयालीनाः for प्रळये लीना.

जनित जनयेच्चेति यस्तु दोषस्त्वयेरित. ।
अभिव्यक्तिमने न स्यादभिव्यञ्जक[1]कारणे ॥ ३३ ॥

आत्मानो बहव साध्या देहे देहे व्यवस्थिता ।
एकश्चेद्युगपत्सर्वे म्रियेरन् सम्भवन्तु वा ॥ ३४ ॥

पश्येयुर्युगपत्सर्वे पुस्येकस्मिन् प्रपश्यति ।
अत्र. स्यादात्मनानात्वमद्वैत नोपपद्यते ॥ ३५ ॥

आत्मा ज्ञातव्य इत्यादिविधिभि प्रतिपादित ।
निवृत्तिरूपधर्म स्यान्मोक्षदोऽन्य प्रवर्तक ॥ ३६ ॥

अग्निष्टोमादयो यज्ञा काम्या स्युर्विहिता अपि ।
प्रवृत्तिधर्मास्ते [2]ज्ञेया यत पुसा प्रवर्तका ॥ ३७ ॥

धर्मेणोर्ध्वगति पुसामधर्मात्स्यादधोगति ।
ज्ञानेनैवापवर्ग स्यादज्ञानाद्बध्यते नर ॥ ३८ ॥

ब्रह्मार्पणतया यज्ञा कृतास्ते मोक्षदा यदि ।
अयज्ञत्वप्रसङ्गस्स्यान्मन्त्रार्थस्यान्यथाकृते ॥ ३९ ॥

तस्माद्यागादयो धर्मास्ससारेषु प्रवर्तका ।
निषिद्धेभ्योऽपि कर्तव्या पुसा सम्पत्तिहेतव ॥ ४० ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे कपिलवासुदेवसाङ्ख्यपक्षो नाम नवमप्रकरणम्

---

1 C व्यञ्जन for व्यञ्जक   2 C यज्ञा for ज्ञेया .

## अथ पतञ्जलिपक्षः.

अथ सेश्वरसाङ्ख्यस्य वक्ष्ये पक्षं पतञ्जलेः[1] ।
पतञ्जलिरनन्तः स्याद्योगशास्त्रप्रवर्तकः ॥ १ ॥
पञ्चविंशतितत्त्वानि पुरुषः प्रकृतेः परम् ।
जानतो योगसिद्धिः स्याद्योगाद्दोषक्षयो भवेत् ॥ २ ॥
पञ्चविंशतितत्त्वानि पुरुषः प्रकृतिर्महान् ।
अहङ्कारश्च तन्मात्रा विकाराश्चापि षोडश ॥ ३ ॥
महाभूतानि चेत्येतद्रूपिणैव सुविस्तृतम् ।
ज्ञानमात्रेण मुक्तिः स्यादित्यालस्यस्य लक्षणम् ॥ ४ ॥
ज्ञानिनोऽपि भवत्येव दोषैर्बुद्धिभ्रमः क्वचित् ।
गुरूपदिष्टविद्यातो नष्टाविद्योऽपि पूरुषः ॥ ५ ॥
देहदर्पणदोषांस्तु योगेनैव विनाशयेत् ।
सम्यग्ज्ञातो रसो यद्वद्गुडादेर्नानुभूयते ॥ ६ ॥
पित्तज्वरघ्नैस्तस्माद्दोषानेव विनाशयेत् ।
गुरूपदिष्टविद्यस्य विरक्तस्य नरस्य तु ॥ ७ ॥
दोषक्षयकरस्तस्माद्योगादन्यो न विद्यते ।
अविद्योपात्तकर्तृत्वात्कामात्कर्माणि कुर्वते ॥ ८ ॥
तत्र कर्मविपाकेन जात्यायुर्भोगसम्भवः ।
पञ्चक्लेशास्त्वविद्या च रागद्वेषौ तदुद्भवौ ॥ ९ ॥
अस्मिताभिनिवेशौ च तत्राविद्यैव कारणम् ।
आत्मबुद्धिरविद्या स्यादनात्मनि कलेवरे ॥ १० ॥

---

1 C भागेन for पातेन.

पञ्चभूतात्मको देहो देही [1]ह्यात्मा ततोऽपर ।
तज्जन्यपुत्रपौत्रादिसन्तानेऽपि [2]ममत्वधी ॥ ११ ॥
अविद्या देहभोग्ये वा गृहक्षेत्रादिके तथा ।
नष्टाविद्योऽथ तन्मूलरागद्वेषादि[3]वर्जित ॥ १२ ॥
मुक्तये योगमभ्यस्येदिहामुत्रफलास्पृह ।
चित्तवृत्तिनिरोधे स्याद्योग॰ [4]स्वस्मिन्[5]न्यव[6]स्थिति ॥ १३ ॥
[7]वृत्तयो नात्र वर्ण्यन्ते क्लिष्टाक्लिष्टविभेदिता ।
क्रियायोग प्रकुर्वीत साक्षाद्योगप्रवर्तकम् ॥ १४ ॥
क्रियायोगस्तपो[8] मन्त्रजपो भक्तिर्दृढेश्वरे ।
क्लेशकर्मविपाकादिशून्य सर्वज्ञ ईश्वर ॥ १५ ॥
स कालेनानवच्छेदाद्ब्रह्मादीना गुरुर्मत ।
तद्वाचिक स्यात्प्रणवस्तज्जपो वाच्यभावनम्[9] ॥ १६ ॥
योगान्तरायनाश स्यात्तेन प्रत्यक्त्मनो भवेत् ।
आलस्य व्याधयस्तीव्रा प्रमादस्त्यानसशया ॥ १७ ॥
अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम् ।
दु खानि[10] दौर्मनस्यश्च विषयेषु च लोलता ॥ १८ ॥
श्वासप्रश्वासदोषौ च देहकम्पो निरङ्कुश ।
इत्येवमादयो दोषा योगविघ्ना स्वभावत ॥१९ ॥

---

[1] C ˚हीत्या˚ for ˚ह्यात्मा
[2] M ममेति for ममत्व
[3] P ˚द्वेषात्रि˚ for ˚द्वेषादि
[4] P ˚ते˚ for ˚स्व˚.
[5] C ˚मे˚ for ˚न्य˚
[6] P ˚तौ for ˚ति
[7] C वर्ज्य˚ for वर्ण्य˚
[8] P योगात्प्रजायेत तथा˚ for योगस्तपो मन्त्रजपो˚.
[9] P भावना for भावनम्
[10] P सुखानि for दु खानि

ईश्वरप्रणिधानेन तस्माद्विघ्नान्विनाशयेत् ।
मैत्र्यादिभिर्मनश्शुद्धिं कुर्याद्योगस्य साधनम् ॥ २० ॥
मैत्रीं कुर्यात्सुधीर्लोके करुणां दुःखिते जने ।
धर्मेऽनुमोदनं कुर्यादुपेक्षामेव पापिनाम् ॥ २१ ॥
भगवत्क्षेत्रसेवा च सज्जनस्य च सङ्गतिः ।
भगवच्चरिताभ्यासो भावना प्रत्यगात्मनः ॥ २२ ॥
इत्येवमादिभिर्यत्नैः [1]संशुद्धं योगिनो मनः ।
शक्तं स्यादतिसूक्ष्माणां महतामपि भावने ॥ २३ ॥
योगाङ्गकारणाद्दोषे नष्टे ज्ञानप्रकाशनम् ।
अष्टावङ्गानि योगस्य यमोऽथ नियमस्तथा ॥ २४ ॥
आसनं पवनायाम प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरित्येव तानि विस्तरतो यथा ॥ २५ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः पञ्च भवन्त्येते जात्याद्यनुगुणा मताः ॥ २६ ॥
नियमाश्शौचसन्तोष[2]तपोमन्त्रेशसेवना[3] ।
यमस्य नियमस्यापि[4] सिद्धौ वक्ष्ये फलानि च ॥ २७ ॥
अहिंसायाः फलं तस्य सन्निधौ वैरवर्जनम् ।
सत्यादमोघवाक्त्वं स्यादस्तेयाद्रत्नसङ्गतिः ॥ २८ ॥
ब्रह्मचर्याद्वीर्यलाभो जन्मधीरपरिग्रहात् ।
शौचात्स्वाङ्गेऽजुगुप्सा स्याद्दुर्जनस्पर्शवर्जनम् ॥ २९ ॥
सत्त्वशुद्धिस्सौमनस्यमैकात्म्येन्द्रियवश्यते ।
आत्मदर्शनयोग्यत्वं मनश्शौचफलं भवेत् ॥ ३० ॥

---

[1] C सुशुद्धम् for संशुद्धम्.
[2] M सन्तोषाः for सन्तोष.
[3] M सेवने for सेवना.
[4] M °स्याप for °स्यापि.

अनुत्तमसुखावाप्तिः सन्तोषाद्योगिनो भवेत् ।
इन्द्रियाणाञ्च कायस्य सिद्धिः स्यात्तपसः फलम् ॥ ३१ ॥

इन्द्रियस्य तु सिद्ध्या स्याद्दूरालोकादिसम्भवः ।
कायसिद्ध्याणिमादिः स्यात्तस्य दिव्यशरीरिणः ॥ ३२ ॥

जपेन देवताकर्षः समाधिस्त्वीशसेवया ।
आसनं स्यात् स्थिरसुखं द्वन्द्वनाशस्ततो भवेत् ॥ ३३ ॥

पद्मभद्रमयूराख्यैर्वीरस्वस्तिककुक्कुटैः ।
आसनैर्योगशास्त्रोक्तैरासितव्यश्च योगिभि[1] ॥ ३४ ॥

प्राणापाननिरोधः स्यात् प्राणायामस्त्रिधा हि सः ।
कर्तव्यो योगिना तेन रेचपूरककुम्भकैः ॥ ३५ ॥

रेचनाद्रेचको वायोः पूरणात्पूरको भवेत् ।
सम्पूर्णकुम्भवत्स्थानादचलस्तु कुम्भकः ॥ ३६ ॥

प्राणायामश्चतुर्थः स्याद्रेचपूरककुम्भकान् ।
हित्वा निजस्थितिर्वायोरविद्यापापनाशिनी ॥ ३७ ॥

इन्द्रियाणाञ्च[2] चरतां विषयेभ्यो निवर्तनम् ।
प्रत्याहारो भवेत्तस्य फलमिन्द्रियवश्यता ॥ ३८ ॥

चित्तस्य देशबन्धः स्याद्धारणा द्विविधा हि सा ।
देशबाह्यान्तरत्वेन बाह्यः स्यात्प्रतिमादिकः ॥ ३९ ॥

देशस्त्वाभ्यन्तरो ज्ञेयो नाभिचक्रहृदादिकः[3] ।
चित्तस्य बन्धनं तत्र[4] वृत्तिरेव न चापरम् ॥ ४० ॥

---

1 M आसितव्या हि योगिना for आसितव्यश्च योगिभि.

2 M °णां हि for °णाञ्च.

3 C देशस्त्वाभ्यन्तरा ज्ञेया नाभिचक्रहृदादयः for देशस्त्वाभ्यन्तरो ज्ञेयो नाभिचक्रहृदादिकः

4 D तस्य for तत्र.

नाभिचक्रादिदेशेषु प्रत्ययस्यैकतानता ।
ध्यानं समाधिस्तत्रैव स्वात्मनः शून्यवत्स्थितिः ॥ ४१ ॥
धारणादित्रये त्वेकविषये पारिभाषिकी ।
सञ्ज्ञा संयम इत्येषा त्र्योच्चारणलाघवात् ॥ ४२ ॥
योगिनस्संयमजयात् प्रज्ञालोकः प्रवर्तते ।
संयमस्स्तु कर्तव्यो विनियोगोऽत्र भूमिषु ॥ ४३ ॥
पञ्चभ्योऽपि यमादिभ्यो धारणादित्रयं भवेत् ।
अन्तरङ्गं हि निर्बीजसमाधिः स्यात्ततः परम् ॥ ४४ ॥
अजित्वा त्वपरां भूमिं नारोहेद्भूमिमुत्तराम् ।
अजित्वारोहणे भूमेर्योगिनस्स्युरुपद्रवाः ॥ ४५ ॥
हिक्काश्वासप्रतिश्यायकर्णदन्ताक्षिवेदनाः ।
मूकताजडताकासशिरोरोगज्वरास्त्विति ॥ ४६ ॥
यस्येश्वरप्रसादेन योगो भवति तस्य तु ।
न रोगाः सम्भवन्त्येते येऽधरोत्तरभूमिजाः ॥ ४७ ॥
एक एवाखिलो धर्मो बाल्यकौमारयौवनैः ।
वार्धकेन तु कात्स्न्र्येन परिणामाद्विनश्यति ॥ ४८ ॥
पराभूतस्य यातीडापिङ्गलाभ्यामहर्निशम् ।
कालस्य शमयेत्प्रत्यगभियातः सुषुम्नया ॥ ४९ ॥
मुक्तिमार्गः सुषुम्ना स्यात् कालस्तत्र हि वञ्चितः ।
चन्द्रादित्यात्मकः कालस्तयोर्मार्गद्वयं स्फुटम् ॥ ५० ॥

P वं मानशून्यपदास्थिति for वं स्वात्मनः शून्यवत् स्थितिः
² B संयमस्य for संयमस्स
³ C °भ्यो °नि for °भ्योऽपि
⁴ M °जस्स° for °जस°
⁵ C लाघवात् for लपराम
⁶ P ज्वरास्थिति for °ज्वरास्त्विति
P प्रभवन्त्येते for सम्भवन्त्येते
⁸ O °स्तु न for °स्त न°

क्षीरात्समुद्धृतं त्वाज्यं न पुनः क्षीरतां व्रजेत् ।
पृथक्कृतो गुणेभ्यस्तु भूयो नात्मा गुणी भवेत् ॥ ५१ ॥
यथा नीता रसेन्द्रेण धातवश्शातकुम्भताम् ।
पुनरावृत्तये न स्युस्तद्वदात्मापि योगिनाम् ॥ ५२ ॥
नाडीचक्रगतिर्ज्ञेया योगमभ्यस्यतां[1] सदा ।
सुषुम्ना मध्यवंशास्थिद्वारेण[2] तु शिरोगता ॥ ५३ ॥
इडा च पिङ्गळा घ्राण[3]प्रदेशे सव्यदक्षिणे ।
इडा चन्द्रस्य मार्गः स्यात्पिङ्गळा तु रवेस्तथा ॥ ५४ ॥
कुहूरधो गता लिङ्गं वृषणं पायुमप्यसौ ।
विश्वोदरा धारणा च सव्येतरकरौ क्रमात् ॥ ५५ ॥
सव्येतराङ्घ्री विज्ञेयौ हस्तिजिह्वा यशस्विनी ।
सरस्वती तु जिह्वा स्यात् सुषुम्नापृष्ठनिर्गता ॥ ५६ ॥
तत्पार्श्वयोः स्थितौ कर्णौ शङ्खिनी च पयस्विनी ।
गान्धारी[4] सव्यनेत्रं स्यान्नेत्रं पूषा तु दक्षिणम् ॥ ५७ ॥
ज्ञानकर्मेन्द्रियाणि स्युर्नाड्यः 'कण्ठाद्विनिस्सृता' ।
नाड्यो हि योगिनां ज्ञेया सिरा एव न चापराः ॥ ५८ ॥
प्राणादिवायुसञ्चारो नाडीष्वेव यथा तथा ।
ज्ञातव्यो योगशास्त्रेषु तद्व्यापारश्च दृश्यताम् ॥ ५९ ॥
योगी तु संयमस्थाने सयमात्सर्वविद्भवेत् ।
पूर्वजातिपरिज्ञानं संस्कारे संयमाद्भवेत् ॥ ६० ॥
हस्त्यादीनां बलानि स्युर्हस्त्यादिस्थानसंयमात् ।
मैत्र्यादि लभते योगी मैत्र्यादिस्थानसंयमात् ॥ ६१ ॥

[1] C °मता सता for °स्यतां सदा.
[2] ■ मार्गेण for द्वारेण.
[3] M पुटे द्वे for प्रदेशे.
[4] O गान्धारा for गान्धारी.

चन्द्रे[1] स्यात्संयमात्तस्य ताराव्यूहवेदनम्[2] ।
ध्रुवेऽनागत[3]विज्ञान सूर्ये स्याद्भुवनेषु धी ॥ ६२ ॥

(कायव्यूहपरिज्ञान नाभिचक्रे तु संयमात् ।
क्षुत्पिपासानिवृत्ति स्यात्कर्णकूपे तु संयमात् ॥ ६३ ॥

कर्णनाड्या भवत्स्थैर्यमर्थज्योतिषि सिद्धधी[4] ।
जिह्वाग्रे रसत्संवित्स्यान्नासाग्रे गन्धवेदनम् ॥ ६४ ॥

अभ्यासादनिश तस्माद्देहकान्तिश्शुभाकृति ।
क्षुदादिविनिवृत्तिश्च जायते वत्सरायत[5] ॥ ६५ ॥

संवत्सरेण विविधा जायन्ते योगसिद्धय ।
यथेष्टचीरत ज्ञानमतीताद्यर्थगोचरम् ॥ ६६ ॥

स्वदेहेन्द्रियसशुद्धि[6]र्जरामरणसक्षय ।
वैराग्येण निवृत्ति स्यात्ससारे योगिनोऽचिरात् ॥ ६७ ॥

अणिमाद्यष्टक तस्य योगसिद्धस्य जायते ।
तेन मुक्तिविरोधो न शिवस्येव यथा तथा ॥ ६८ ॥

अणिमा लघिमा चैव महिमा प्राप्तिरीशता ।
प्राकाम्यच्च तथेशित्व वशित्व यत्र कामदम् ॥ ६९ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे पतञ्जलि-सेश्वरसाङ्ख्यपक्षो नाम दशमप्रकरणम्

---

[1] P चन्द्रस्य सय° for चन्द्रे स्यात् सय°
[2] M वेदना for वेदनम्
[3] C तद्गति for अनागत
[4] P सिद्धये for सिद्धधी.
[5] B वत्सरार्धत for वत्सरायत
[6] M शुद्धिश्च for सशुद्धि .

## अथ वेदव्यासपक्ष

सर्वशास्त्राविरोधेन व्यासोक्तो भारते द्विजै ।
गृह्यते साङ्ख्यपक्षाद्धि वेदसारोऽथ वैदिकै[1] ॥ १ ॥
पुरुष[2] प्रकृतिश्चेति द्वयात्मकमिद जगत् ।
परश्शयानस्तन्मात्रपुरे[3] तु पुरुष स्मृत ॥ २ ॥
तन्मात्रास्तूक्ष्मभूतानि प्रायस्ते त्रिगुणास्स्मृता[4] ।
प्रकृतिर्गुणसाम्य स्याद्गुणास्सत्त्व रजस्तम ॥ ३ ॥
बन्ध पुसो गुणावेशो मुक्तिर्गुणविवेकधी ।
गुणस्वभावैरात्मा स्यादुत्तमो मध्यमोऽधम ॥ ४ ॥
उत्तम साच्चिक श्लेष्मप्रकृतिस्स[5] जलात्मक ।
राजसो मध्यमो ह्यात्मा स पित्तप्रकृतिर्मत ॥ ५ ॥
अधमस्तामसो वातप्रकृतिर्यत्तमो मरुत् ।
सत्त्व शुक्ल रजो रक्त धूम्र कृष्ण तमो मतम्[6] ॥ ६ ॥
जलाग्निपवनात्मान शुक्लरक्तासितास्तत ।
तत्तदाकारचेष्टाद्यैर्लक्ष्यन्ते साच्चिकादय ॥ ७ ॥
प्रियङ्गुदूर्वाशस्त्राब्जहेमवर्ण कफात्मक ।
गूढास्थिबन्धस्सुस्निग्धपृथुवक्षा बृहत्तनु[8] ॥ ८ ॥

---

[1] वैदिकै for वैदिक in other MSS

[2] C प्रकृति पुरुषश्चेति for पुरुष प्रकृतिश्चेति

[3] P द्विपात्मक° for द्वयात्मक°

[4] C पुरेऽत्र for पुरे तु

[5] C त्रिगुणात्मका for त्रिगुणास्स्मृता

[6] C यज्जल कफ for °स्स जलात्मक

C has रजो रक्त धूम्रम् another reading being धूम्रवर्ण रज

[7] C यत for मतम्

[8] C बृहत्तर for बृहत्तनु

चन्द्रे[1] स्यात्संयमात्तस्य तारकाव्यूहवेदनम्[2] ।
ध्रुवेऽनागत[3]विज्ञानं सूर्ये स्याद्भुवनेषु धीः ॥ ६२ ॥

(कायव्यूहपरिज्ञानं नाभिचक्रे तु संयमात् ।
क्षुत्पिपासानिवृत्तिः स्यात्कण्ठकूपे तु संयमात् ॥ ६३ ॥

कर्णनाड्या भवेत्स्थैर्यमर्धज्योतिषि सिद्धधीः[4] ।
जिह्वाग्रे रससंवित्स्यान्नासाग्रे गन्धवेदनम् ॥ ६४ ॥

अभ्यासादनिशं तस्माद्देहकान्तिः शुभाकृतिः ।
क्षुदादिविनिवृत्तिश्च जायते वत्सरायत[5] ॥ ६५ ॥

संवत्सरेण विविधा जायन्ते योगसिद्धयः ।
यथेष्टचरितं ज्ञानमतीताद्यर्थगोचरम् ॥ ६६ ॥

स्वदेहेन्द्रियसंशुद्धि[6]र्जरामरणसंक्षयः ।
वैराग्येण निवृत्तिः स्यात्संसारे योगिनोऽचिरात् ॥ ६७ ॥

अणिमाद्यष्टकं तस्य योगसिद्धस्य जायते ।
तेन मुक्तिविरोधो न शिवस्येव यथा तथा ॥ ६८ ॥

अणिमा लघिमा चैव महिमा प्राप्तिरीशिता ।
प्राकाम्यं च तथेशित्वं वशित्वं यत्र कामदम् ॥ ६९ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे पतञ्जलिसेश्वरसाङ्ख्यपक्षो नाम दशमप्रकरणम्

---

[1] P चन्द्रस्य सं° for चन्द्रे स्यात् सं°
[2] M वदना for वेदनम्
[3] O तद्गति for अनागत
[4] P सिद्धये for सिद्धधीः.
[5] [illegible] वत्सरार्धतः for वत्सरायत
[6] m शुद्धिश्च for संशुद्धि.

## अथ वेदव्यासपक्षः.

---

सर्वशास्त्राविरोधेन व्यासोक्तो भारते द्विजैः ।
गृह्यते साङ्ख्यपक्षाद्धि वेदसारोऽथ वैदिकैः[1] ॥ १ ॥
पुरुषः[2] प्रकृतिश्चेति[3] द्वयात्मकमिदं जगत् ।
परश्शायानस्तन्मात्रपुरे[4] तु पुरुषः स्मृतः ॥ २ ॥
तन्मात्रास्सूक्ष्मभूतानि मायस्ते त्रिगुणास्स्मृताः[5] ।
प्रकृतिर्गुणसाम्यं स्याद्गुणास्सत्त्वं रजस्तमः ॥ ३ ॥
बन्धः पुंसो गुणावेशो मुक्तिर्गुणविवेकधीः ।
गुणस्वभावैरात्मा स्यादुत्तमो मध्यमोऽधमः ॥ ४ ॥
उत्तमः सात्त्विकः श्लेष्मप्रकृतिस्स[6] जलात्मकः ।
राजसो मध्यमो ह्यात्मा स पित्तप्रकृतिर्मतः ॥ ५ ॥
अधमस्तामसो वातप्रकृतिर्यत्तमो मरुत् ।
सत्त्वं शुक्लं रजो रक्तं धूम्रं कृष्णं तमो मतम्[8] ॥[7] ६ ॥
जलाग्निपवनात्मानः शुक्लरक्तासितास्ततः ।
तत्तदाकारचेष्टाद्यैर्लक्ष्यन्ते सात्त्विकादयः ॥ ७ ॥
प्रियङ्गुदूर्वाशस्त्राब्जहेमवर्णः कफात्मकः ।
गूढास्थिबन्धस्सुस्निग्धपृथुवक्षा बृहत्तनुः[9] ॥ ८ ॥

---

[1] वैदिकैः for वैदिकैः in other MSS.

[2] C प्रकृतिः पुरुषश्चेति for पुरुषः प्रकृतिश्चेति.

[3] P द्विधात्मक° for द्वयात्मक°.

[4] C पुरेऽत्र for पुरे तु

[5] C त्रिगुणात्मका for त्रिगुणास्स्मृताः

[6] C यज्जलं वपुः for °स्स जलात्मकः

[7] C has रजो रक्तं धूम्रम् another reading being धूम्रवर्णं रजः

[8] C यतः for मतम्

[9] C बृहत्तरः for बृहत्तनुः

निर्हारी ¹सङ्गत स्निग्धो रूक्षो विशद एव च।
एव नवविधो ज्ञेय पार्थिवो गन्धविस्तर॰ ॥ ३९ ॥
मधुरो लवणास्तिक्त कषायोऽम्ल कटुस्तथा।
एव षड्विधविस्तारो रसो वारिमयो मत² ॥ ४० ॥
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरश्रोऽथ वृत्तवान्।
शुक्ल कृष्णस्तथा रक्तो नील पीतोऽरुणस्तथा ॥ ४१ ॥
एव द्वादशविस्तारो ज्योतिषोऽपि गुण स्मृत।
षड्जर्षभौ च³ गान्धारो मध्यम पञ्चमस्तथा ॥ ४२ ॥
धैवतो निषधश्चैव सप्तैते शब्दजा गुणा।
उष्णश्शीत सुख दुख स्निग्धो विशद एव च ॥ ४३ ॥
कठिनाश्चिक्कण श्लक्ष्ण पिच्छिलो मृदुदारुणौ।
एव द्वादशविस्तारो वायव्यो गुण उच्यते ॥ ४४ ॥
आकाशज शब्दमाहुरेभिर्वायुगुणैस्सह।
अव्याहतैश्चेतयते न वेत्ति विषमागतै ॥ ४५ ॥
अथाप्यायते नित्य धातुभिस्तैस्तु पञ्चभि।
आपोऽग्निर्मरुतश्चैव⁴ नित्य जाग्रति देहिषु ॥ ४६ ॥
चतुर्व्यूहात्मको विष्णुश्चतुर्धैवाकरोज्जगत्।
ब्रह्मक्षत्रियविट्शूद्राश्चतुर्वर्णान् गणात्मकान् ॥ ४७ ॥
विप्रश्शुक्लो नृपो रक्त पीता वश्याऽन्त्यजोऽसित।
विस्तृत्य धर्मशास्त्रे हि⁵ तेषा कर्म समीरितम् ॥ ४८ ॥
एकस्मिन्नेव वर्ण तु चातुर्वर्ण्य गुणात्मकम्।
मोक्षधर्मेऽधिकारित्वसिद्धये मुनिरभ्यधात् ॥ ४९ ॥

---

¹ C सद्दत॰ for सङ्गत
² M ॰यस्स्मृत for ॰यो मत
³ M तु for च
⁴ M ॰श्चम् for ॰श्चैव
⁵ P शास्त्रेषु for शास्त्रे हि

स कर्मदेवतायोगज्ञानकाण्डेष्वनुक्रमात् ।
प्रवर्तयति तत्कर्मपरिपाकक्रमं विदन् ॥ ५० ॥

ऋजवश्शुद्धवर्णाभा[1] क्षमावन्तो दयाध्व्वः ।
स्वधर्मनिरता ये स्युस्ते द्विजेषु द्विजातयः ॥ ५१ ॥

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ ५२ ॥

गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः ।
न स्वकर्म करिष्यन्ति ते द्विजा वैश्यतां गताः ॥ ५३ ॥

हिंसानृतप्रियाः क्षुद्रास्सर्वकर्मोपजीविनः ।
कृष्णाश्शौचपरिभ्रष्टास्ते द्विजाश्शूद्रतां गताः ॥ ५४ ॥

समयाचारनिश्शेषकृत्यभेदैर्विमोहयन् ।
मोक्षदो विष्णुरेव स्याद्देवदैतेयरक्षसाम् ॥ ५५ ॥

चतुर्भिर्जन्मभिर्मुक्तिर्द्वेषेण भजतस्तव ।
भवेदिति वरो दत्तः पुण्डरीकाय विष्णुना ॥ ५६ ॥

रजस्सत्त्वतमोमार्गैस्तदात्मानस्स्वकर्मभिः ।
प्राप्यते विष्णुरेवैको देवदैत्यनिशाचरैः ॥ ५७ ॥

ब्रह्मविष्णुहराख्याभिः सृष्टिस्थितिलयानपि ।
हरिरेव करोत्येको रजस्सत्त्वतमोवशात् ॥ ५८ ॥

सात्त्विकास्त्रिदशास्सर्वे स्वसुरा राजसा मताः ।
तामसा राक्षसाश्शीलप्रकृत्याकृतिवर्णतः ॥ ५९ ॥

धर्मस्सुराणां पक्षस्स्यादधर्मोऽसुररक्षसाम् ।
पिशाचादेरधर्मस्स्यादेषां लक्ष्म रजस्तमः ॥ ६० ॥

---

[1] M °रक्तधर्माभा । P °शुद्धवर्णाभा

ईश्वराज्ज्ञानमन्विच्छेच्छ्रियमिच्छेद्धुताशनात् ।
आरोग्यं भास्करादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ ६१ ॥

यस्मिन्पक्षे तु यो जातः सुरो वाप्यसुरोऽपि वा ।
स्वधर्म एव तस्य स्यादधर्मोऽप्यत्र धर्मवित् ॥ ६२ ॥

वेदत्रयोक्ता ये धर्मास्तेऽनुष्ठेयास्तु सात्त्विकैः ।
अधर्मोऽथर्ववेदोक्तो राजसैस्तामसैः श्रितः ॥ ६३ ॥

विष्णुक्रमणपर्यन्तो यागोऽस्माकं यथा तथा ।
राजसैस्तामसैर्ब्रह्मरुद्राविज्यौ तु तद्गुणौ ॥ ६४ ॥

निजधर्मपथायातानन्गृह्णात्यसौ हरिः ।
मुच्यते निजधर्मेण [1]परधर्मो भयावहः ॥ ६५ ॥

एक एव परो विष्णुः सुरासुरनिशाचरान् ।
त्रिगुणाननुगुणं नित्यमनुगृह्णाति लीलया ॥ ६६ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे वेदव्यासोक्तभारतपक्षो नामैकादशप्रकरणम् ॥

---

[1] M धर्मोद्धि for धर्मेण

अथ वेदान्तपक्ष .

---

वेदान्तशास्त्रसिद्धान्त सक्षेपादथ कथ्यते ।
तदर्थप्रवणा प्राय सिद्धान्ता परवादिनाम् ॥ १ ॥
ब्रह्मार्पणकृते पुण्ये ब्रह्मज्ञानाधिकारिभि ।
तत्त्वमस्यादिवाक्यार्थो ब्रह्म जिज्ञास्यते बुधै ॥ २ ॥
नित्यानित्यविवेकित्वमिहामुत्रफलास्पृहा ।
शमो दमो मुमुक्षुत्व यस्य तस्याधिकारिता ॥ ३ ॥
तत्त्वमस्येन नान्यस्त्व तच्छब्दार्थ परेश्वर ।
त्वशब्दार्थ पुरोवर्ती तिर्यङ्मर्त्यादिकोऽपर ॥ ४ ॥
तादात्म्यमसिशब्दार्थो ज्ञेयस्तत्त्वपदार्थयो ।
सोऽय पुरुष इत्यादिवाक्ये तादात्म्यवन्मत ॥ ५ ॥
स्यान्मत तत्त्वमस्यादिवाक्य सिद्धार्थबोधनात् ।
कथ प्रवर्तक पुसा विधिरेव प्रवर्तक ॥ ६ ॥
आत्मा ज्ञातव्य इत्यादिविधिभि[1] प्रतिपादिता ।
यजमाना प्रशस्यन्ते तत्त्ववादैरिहारुणै ॥ ७ ॥
बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुव ।
नानाभूत प्रतिक्षेत्रमर्थवित्तिषु[2] भासते ॥ ८ ॥
स्वर्गिणो ब्रह्मजिज्ञासा वाक्यस्यान्यपरत्वत ।
अत्र प्रमरसभाधान न लिङेव प्रवर्तक ॥ ९ ॥
इष्टसाधनताज्ञानादपि लोके प्रवर्तने ।
पुत्रस्ते जात इत्यादौ विधिरूपो न तादृश ॥ १० ॥

---

1 J अग्न for ब्रह्म
2 P तृतिष for त्रितिपु
3 M स्तु for °त्सुत्व

आत्मा ज्ञातव्य इत्यादिविधयस्त्वारुणे स्थिता ।
बोध विदधते ब्रह्मण्यज्ञानाक्रान्तचेतसाम् ॥ ११ ॥

त्यजेतत्काम्यकर्माणि प्रतिषिद्धानि वर्जयत् ।
विहित कर्म कुर्वाण शुद्धान्त करण पुमान् ॥ १२ ॥

स्वयमेव भवेज्ज्ञानी गुरुवाक्यानपेक्षया ।
तदयुक्त न विज्ञान कर्मभि केवलैर्भवेत् ॥ १३ ॥

गुरुप्रसादजन्य हि ज्ञानमित्युक्तमारुणे ।
प्रत्यक्प्रवणता बुद्धे कर्माण्युत्पाद्य शक्तित[1] ॥ १४ ॥

कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ।
प्रत्यक्प्रवणबुद्धेस्तु ब्रह्मज्ञानाधिकारिण ॥ १५ ॥

स्यादेव ब्रह्मजिज्ञासा तत्त्वमस्यादिभिर्गिरो ।
तत्त्वमस्यादिवाक्यौघो[4] व्याख्यातो हि पुन पुन ॥ १६ ॥

गुर्वनुग्रहहीनस्य नात्मा सम्यक्प्रकाशते ।
आत्माविद्यानिमित्तोत्थ प्रपञ्च पाञ्चभौतिक ॥ १७ ॥

निवर्तते यथा तुच्छ शरीरभुवनात्मकम् ।
तथा ब्रह्मविवर्तन्तु विज्ञेयमखिल जगत् ॥ १८ ॥

वेदान्तोक्तात्मविज्ञानविपरीतमतिस्तु या ।
अविद्या सत्यादि स्थूलसूक्ष्मात्मना स्थिता ॥ १९ ॥

आत्मन एव ततो वायुर्वायोरग्निस्ततो जलम् ।
जलात्पृथिव्यभूत्सर्वं ब्रह्माद्यापधयोऽभवन् ॥ २० ॥

---

1 P °ज्ञान for ज्ञात
2 C विज्ञानी for विज्ञानम्
3 I बुद्धित for शक्तित
4 I वाक्यार्थो for वाक्यौघो
5 C अपि for हि

ओषधिभ्योऽन्नमन्नात्तु पुरुषः पञ्चकोशवान् ।
अपञ्चीकृततन्मात्रं सूक्ष्मभूतात्मकं जनः ॥ २१ ॥
स्थूलीभवति तद्देहे सर्वदुःखनरासुरात्मकः ।
धर्माधिक्ये तु देवत्वं तिर्यक्त्वं स्यादधर्मतः ॥ २२ ॥
तयोस्साम्ये मनुष्यत्वमिति त्रेधा तु कर्मभिः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः ॥ २३ ॥
सप्तान्नपरिणामाः स्युः पुंस्त्रीत्वमपि न स्वतः ।
शुक्लाधिक्ये पुमान् गर्भे रक्ताधिक्ये वधूस्तथा ॥ २४ ॥
नपुंसकं तयोस्साम्ये मातुस्सञ्जायते सदा ।
मज्जास्थिस्नायवश्शुक्लाद्रक्तात्त्वङ्मांसशोणिताः ॥ २५ ॥
षट्कोशाख्यं भवेदेतत्पितुर्मातुस्त्रयन्त्रयम् ।
बुभुक्षा च पिपासा च शोकमोहौ जरामृती ॥ २६ ॥
षडूर्मयः प्राणबुद्धिदेहेषु स्याद्द्वयन्द्वयम् ।
आत्मत्वेन भ्रमन्त्यत्र वादिनः कोशपञ्चके ॥ २७ ॥
अन्नप्राणमनोज्ञानमयाः कोशास्तथात्मनः ।
आनन्दमयकोशश्च पञ्च कोशा इतीरिताः ॥ २८ ॥
मयड्विकारे विहित इत्यानन्दमयोऽभ्यसन् ।
गृह्णात्यन्नमयात्मानं देहं लोकायतः खलु ॥ २९ ॥
देहे परिमितं प्राणमयमार्‌हता[1] विदुः ।
विज्ञानमयमात्मानं बौद्धा गृह्णन्ति नापरम् ॥ ३० ॥
आनन्दमयमात्मानं वैदिकाः केचिदूचिरे ।
अहङ्कारात्मवादी तु प्राह प्रायो मनोमयम् ॥ ३१ ॥
कर्तृत्वादिभिरस्पृष्टो ग्राह्य आत्मात्मविन्मते ।
कर्तृत्वं कर्मकाण्डस्थैर्देवताकाण्डमाश्रितैः ॥ ३२ ॥

---

[1] आर्‌हता is to be read as a tetrasyllabic word to suit the metre and is equivalent to आर्हता

अवश्याश्रयणीयं हि नान्यथा कर्म सिध्यति ।
वसन्ते ब्राह्मणोऽग्नीनादधीतेति वै विधौ ॥ ३३ ॥

देहो वात्मविशिष्टो वा कोऽधिकारी तु कर्मणि ।
अचेतनत्वाद्देहस्य स्वर्गकामाद्यसम्भवात् ॥ ३४ ॥

न जाघटीति कर्तृत्व नाशित्वात्तत्र कर्मणि ।
आत्मनो ब्राह्मणत्वादिजातिरेव न विद्यते ॥ ३५ ॥

जातिवर्णाश्रमावस्थाविकारभ्योऽपि सोऽपर ।
विशिष्टो नापर कश्चिद्विद्यते देहदेहिनो ॥ ३६ ॥

अत काल्पनिक कर्ता विज्ञेयस्तत्र कर्मणि ।
नेति नेत्युच्यमाने तु पञ्चकोशे क्रमेण य ॥ ३७ ॥

भासते तत्पर ब्रह्म स्यादाविद्या ततोऽन्यथा ।
आत्मस्वरूपमाच्छाद्य विक्षेपान् सा करोत्यलम् ॥ ३८ ॥

अहङ्काराख्यविक्षेप कामात्कर्मफलस्तदा ।
मूलभूतोऽखिलभ्रान्तेर्बिभ्राणो दु ख सन्ततिम् ॥ ३९ ॥

व्यवहाराल् करोत्युच्चै सर्वान् लौकिकवैदिकान् ।
मातृमानप्रमेयादिभिन्नान् सर्वस्य सत्यवत् ॥ ४० ॥

निष्क्रियस्य त्वसङ्गस्य चिन्मात्रस्यात्मन खलु ।
स्वतो न व्यवहारोऽस्य सम्भवत्यनपेक्षिण ॥ ४१ ॥

जडश्चेतत्यहङ्कारश्चैतन्याध्यासवान्ध्रुवम् ।
अन्यवस्त्वन्तराध्यासादात्मान्यत्वेन भासते ॥ ४२ ॥

---

1 O अप्यसौ for अपि सो°
1 P सन्ततिम् 1 r महातिम्
1 P अध्यासनात् ध्रुवम् for अध्यासवान् ध्रुवम्

इदमंशौ द्विधाभूतस्तत्र प्राणः क्रियाश्रयः ।
ज्ञानाधारोऽपरो बुद्धिर्मन इत्यंश ईरित. ॥ ४३ ॥

तस्य चेष्टादयोऽपीष्टाः प्राणाद्या. पञ्च वायवः ।
करणाद्याः क्रियाभेदवागादिद्वारकास्तथा ॥ ४४ ॥

द्विधान्त.करणं बुद्धिर्मनः कार्यवशादिह ।
आत्मैव केवलस्साक्षादहंबुद्धौ तु[1] भाति चेत् ॥ ४५ ॥

कृशोऽस्मीति मतौ भाति केवलो नेति तद्वद ।
कृशादयोऽत्र[2] दृश्यत्वान्नात्मधर्मा यथा मताः ॥ ४६ ॥

सुखादयोऽपि देहस्था नात्मधर्मास्तथैव च ।
मातृमानप्रमेयेभ्यो[3] भिन्न आत्मात्मविन्मते ॥ ४७ ॥

तथैव चोपपाद्यस्स्यान्निरस्य परवादिनः ।
अनात्मा विषयश्चेति प्रतिपाद्यो[4] न कस्यचित् ॥ ४८ ॥

घटोऽहमिति कस्यापि प्रतिपत्तेरभावतः ।
रूपादिमत्त्वाद्दृश्यत्वाज्जडत्वाद्भौतिकत्वतः ॥ ४९ ॥

अन्नवधादनीयत्वाच्छ्वादेर्नात्मा कळेबरम् ।
देहतो व्यतिरेकेण चैतन्यस्य प्रकाशनात् । ५० ॥

अतस्त्वन्नमयो देहो नात्मा लोकायतेरितः ।
प्राणोऽप्यात्मा न वायुत्वाज्जडत्वाद्बाह्यवायुवत् ॥ ५१ ॥

इन्द्रियाणि न चात्मा स्यात् करणत्वात्प्रदीपवत् ।
चञ्चलत्वान्मनो नात्मा सुषुप्तौ तदसम्भवात् ॥ ५२ ॥

सुखे पर्यवसानाच्च सुखमेवात्मविग्रह ।
धत्तेऽन्नमयमात्मानं प्राण. प्राणं मनो मन. ॥ ५३ ॥

---

[1] P बुद्ध्यैव for बुद्धौ तु
[3] P प्रमेयादि° for प्रमेयेभ्यो.°
[2] P अत्रानित्यत्वात् for अत्र दृश्यत्वात्.
[4] C नु for न.

सच्चिदानन्दगोविन्दपरमात्मा वहत्यसौ ।
यदा बाह्येन्द्रियैरात्मा भुङ्क्तेऽर्थान् स्वपराङ्मुखान् ॥ ९४ ॥

तदा जाग्रदवस्था स्यादात्मनो विश्वसंज्ञिता ।
बाह्येन्द्रियगृहीतार्थान् मनोमात्रेण वै यदा ॥ ९५ ॥

भुङ्क्ते स्वप्नस्तदा ज्ञेया तैजसाख्या परात्मन ।
अविद्यातिमिरग्रस्तमनस्यात्मन्यवस्थिते ॥ ९६ ॥

सुषुप्त्यवस्था विज्ञेया प्राज्ञाख्यानन्दसंज्ञिता ।
स्वापेऽपि तिष्ठति प्राणो मृतभ्रान्तिनिवृत्तये ॥ ९७ ॥

अन्यथा श्वादयोऽश्नन्ति संस्करिष्यन्ति वानले ।
स्वापेऽप्यानन्दसद्भावो भवत्येवोत्थितो यतः ॥ ९८ ॥

सुखमस्वाप्समित्येव परामृशति वै स्मरन् ।
स्यान्मत विषयाभावान्न तद्विषयन सुखम् ॥ ९९ ॥

वेद्यत्वान्न निजन्तेन दुःखाभाव सुखभ्रमः ।
प्रतियोगिन्यदृष्टेऽपि सर्वाभावोऽपि गृह्यते ॥ ६० ॥

यतोऽन्यस्मै पुनः पृष्ट सर्वाभाव प्रभाषते ।
न्यायेनानेन भावाना ज्ञानाभावोऽनुभूयते ॥ ६१ ॥

अत्र ब्रूमस्समाधान दुःखाभावो न गृह्यते ।
प्रबुद्धेनेति सुप्तस्य नाज्ञान प्रति साक्षिता ॥ ६२ ॥

प्रतियोग्यग्रहात्स्वापे दुःखस्य प्रतियोगिता ।
अभावाख्यं प्रमाणन्तु नास्ति प्राभाकरे मते ॥ ६३ ॥

नैयायिकमतेऽभावः प्रत्यक्षान्नातिरिच्यते ।
सुखदुःखादिनिर्मुक्तिर्मोक्षे पाषाणवत्स्थितम् ॥ ६४ ॥

---

[1] मीलिता॰ for महिमा. [2] ॰ण्या॰ for अण्या॰.

तत्त्वमस्यादिवाक्योत्थसम्यग्ज्ञानैकबाधकम् ।
प्रत्यक्षमनुमानं चाप्युपमानं तथाऽऽगमः ॥ ८५ ॥

अर्थापत्तिरभावश्च [1]प्रमाणानि षडेव हि ।
व्यावहारिकनामानि भवन्त्येतानि नात्मनि ॥ ८६ ॥

स्वसंवेद्योऽप्रमेयोऽपि लक्ष्यते वाक्यतोऽखिलः ।
हिरण्यगर्भपक्षस्तु वेदान्ताम्नायनिश्चये ॥ ८७ ॥

आनन्दः पुरुषोऽज्ञानं प्रकृतिस्तन्मते मता ।
ज्ञानं द्विधा स्थितं प्रत्यक्पराक् चेति हि भेदतः ॥ ८८ ॥

आनन्दाभिमुखं प्रत्यग्बाह्यार्थाभिमुखं पराक् ।
आत्माज्ञानविवर्तः स्याद्भूततन्मात्रपञ्चकम् ॥ ८९ ॥

तन्मात्रपञ्चकाज्जातमन्तःकरणपञ्चकम् ।
मनो बुद्धिरहङ्कारश्चित्तं ज्ञातृत्वमित्यपि ॥ ९० ॥
पार्थिवः स्यादहङ्कारो ज्ञातृत्वमवकाशजम् ।
करणद्वयमेतत्तु कर्तृत्वेनावभासते ॥ ९१ ॥
बुद्धिः स्यात्तैजसी चित्तमाप्यं स्याद्वायुजं मनः ।
भूतादेकैकशस्तस्य विज्ञेयं गुणपञ्चकम् ॥ ९२ ॥
अहङ्कारो भुवः प्राणो घ्राणं गन्धश्च पायुना ।
चित्तापानौ तथा जिह्वा रसो[2]पस्थावपाङ्गुणाः ॥ ९३ ॥
बुद्ध्युदानौ तथा चक्षू रूपपादास्तु तैजसाः[3] ।
मनो वायोर्व्यानचर्मस्पर्शाः पाणिर्गुणास्तथा ॥ ९४ ॥

---

1 C षट् प्रमाणानि तन्मते for प्रमाणानि षडेव हि.
2 C गुह्यम्° for °पस्थान°
3 C तैजसः for तैजसा.

ज्ञातृत्वश्च समानश्च श्रोत्र शब्दश्च वाक् खजा ।
एकैक सूक्ष्मभूतेभ्य पञ्च पञ्चापरे गुणा ॥ ९५ ॥

अस्थि चर्म तथा मांस नाडीरोमाणि भूगुणा ।
मूत्र श्लेष्मा तथा रक्त शुक्ल मज्जा त्वपाङ्गुणा ॥ ९६ ॥

निद्रा तृष्णा क्षुधा ज्ञेया मैथुनालस्यमग्निजा ।
मजालस्सरणारोहै वायोरुत्थानरोधने ॥ ९७ ॥

कामक्रोधौ लोभभये मोहो व्योमगुणास्तथा ।
उत्कोऽवधूतमार्गश्च कृष्णेनैवोद्धव मति ॥ ९८ ॥

श्रीभागवतसज्ञे तु पुराणे दृश्यते हि स ।
सर्वदर्शनसिद्धान्तान्वेदान्तान्तानिमान् क्रमात् ।
श्रुत्वार्थवित्सुसक्षिप्तान तत्त्वत पण्डितो भवि ॥ ९९[1] ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसङ्ग्रहे वेदान्तपक्षो नाम द्वादशप्रकरणम् ॥

इति सर्वदर्शनसिद्धान्तसङ्ग्रह समाप्त ॥

---

1 पृष्ठ १०१ मध्य

# CONTENTS.


| | | PAGE |
|---|---|---|
| CHAPTER | I. Introductory | 1 |
| " | II. The System of the Lōkāyatikas | 5 |
| " | III. The System of the Ārhatas or Jainas | 7 |
| " | IV. The Systems of the Bauddhas— | |
| | i. Mādhyamikas | 10 |
| | ii. Yōgācāras | 12 |
| | iii. Sautrāntikas | 13 |
| | iv. Vaibhāṣikas | 14 |
| " | V. The System of the Vaiśeṣikas | 20 |
| " | VI. The System of the Naiyāyikas | 25 |
| " | VII. The Theory of Prabhākara | 31 |
| " | VIII. The System of (Kumārila) Bhaṭṭācārya | 33 |
| " | IX. The System of the Sānkhyas | 39 |
| " | X. The System of Patañjali | 44 |
| " | XI. The System of Vēdavyāsa | 55 |
| " | XII. The Vēdānta System | 61 |

GLOSSARY .. .. .. .. .. .. .. .. [illegible]

# SARVA-SIDDHĀNTA-SAṄGRAHA.

## CHAPTER I.

### INTRODUCTORY

1 (To that Being), who is variously understood by various philosophical controversialists in all (their several) systems of philosophy—to that same Being, who is indeed the one only *Brahman* to be realised in the *Vēdānta*, we offer our worship

2 The auxiliary limbs (*Angas* of the *Vēdas*), the secondary limbs (*Upāngas* thereof), and the supplementary *Vēdas* (*Upavēdas*) are all helpful to the *Vēdas* themselves. They form the sources of knowledge regarding duty (*dharma*), wealth (*artha*), desire (*kāma*), and final deliverance (*mokṣa*); and are fourteen in number.

3 The auxiliary limbs of the *Vēdas* are the following six, viz., the science of accent and phonetics (*śikṣā*), grammar (*vyākarana*), etymology and interpretation (*nirukta*), astronomy (*jyōtiṣa*), ritual code (*kalpa*), and also prosody (*chandōviciti*)

4. The secondary limbs (of the *Vēdas*) are the following four, viz., *Mīmāmsā*, *Nyāyaśāstra* (the science of reasoning), the *Purānas*, and the *Smṛtis*: these are in fact (the indirectly connected) outer limbs of the *Vēdas*.

5 The supplementary *Vēdas* are of four kinds, and they are *Āyurvēda* (science of medicine), *Arthavēda* (science of wealth and government), *Dhanurvēda* (archery and the science of war), and *Gāndharvavēda* (the science and art of music)

6. *Śikṣā* (or the science of accent and phonetics) teaches clearly the distinctive characteristics of *Vēdic* pronunciation. Grammar gives out the characteristics of words and their combinations.

